


# ॥ मातृभूतशतकम् ॥

श्री श्रीधरवेङ्कटेशार्येण

विरचितम् ।




श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितम् ।

१९११.




॥ श्रीः ॥

# ॥ मातृभूतशतकम् ॥



श्रेयांसि यं सकृदनुस्मरतां जनाना-
  माविर्भवन्ति सुमहान्त्यनपायवन्ति ।
तं त्वामनन्यशरणः शरणं व्रजामि
  श्रीमातृभूत शिव पालय मां नमस्ते ॥ १ ॥

आनन्दसच्चिदमलात्मनि शंकरे त्व-
  य्यन्तर्निषीदति भवन्तमहो विहाय ।
भ्राम्यामि मोहविवशो भवशोकखिन्नः
  श्रीमातृभूत शिव पालय मां नमस्ते ॥ २ ॥

मद्दाससूनुरयमित्यनुकम्पनीये
  मय्यर्भके समधिरोप्य वृथापराधान् ।
युक्तं किमेवमधिगन्तुमुदासिकां ते
  श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३ ॥

सौशील्यघस्मरधनस्मयनष्टसंज्ञा-
नज्ञो विषीदति यदेष वृथानुधावन् ।
तत्पश्यतस्तव दया न कथं दयालो
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४ ॥

भक्तिं त्वयि श्रितवतां वद कः प्रहीणः
सा वा तवाहमिति किं न सकृत्प्रपत्तिः ।
किं तद्गतामनवितासि कुतोऽस्म्युपेक्ष्यः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५ ॥

दासस्तवाहमिति यः सकृदप्युपैति
रक्ष्यः स एष इति ते विधृतव्रतस्य ।
रक्ष्योऽहमस्म्यथ कियानफलो विलम्बः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६ ॥

आज्ञापयेः कथमये तव गर्भवासं
दुःखापवर्गिणि गिरीश समाश्रयेयम् ।
आस्तां सहस्रमपि नानुगुणं त्विदं ते
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७ ॥




सर्वज्ञशंकरमहेशदयालुशब्दाः
 किं पारिभाषिकतयोपगता भवन्तम् ।
विज्ञापिते विलपितेऽपि किमित्युदास्से
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८ ॥

हीनैः सदाधिकृतिकैरपि धृष्यमाणे
 सावज्ञमेवमपदे मयि दृश्यमाने ।
नेदं क्षणं क्षणमुपेक्षणमाश्रयेथाः
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९ ॥

आलस्यदुर्विषयसक्त्यपलापनिद्रा-
 पद्मामदाधिगदनीचसमागमादीन् ।
विघ्नान्धुनीहि घटय त्वयि मेऽभिलाषं
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ १० ॥

कासावनन्यसुलभा भवदीयता मे
 भूयिष्ठनिष्ठुरविपद्विषमा क्व वृत्तिः ।
एतन्न किं तव यशोभरभङ्गभीतं
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ११ ॥

संफुल्लचम्पकलसन्नवमल्लिकादि-
हृद्योपचाररुचिरं भवदर्चनं मे ।
पाण्योस्तरङ्गय निरन्तरमन्तरात्म-
न्श्रीमातृभूत शिव पालय मां नमस्ते ॥ १२ ॥

दारैः सुतैः शुभतमैर्द्रविणैः प्रशान्तैः
स्वर्गापवर्गफलसिद्धिभिरभ्युपेताः ।
नन्दन्ति ते करुणया किमसाध्यमस्याः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १३ ॥

कालं कियन्तमघदन्तुरमन्तरङ्गं
त्वच्चिन्तनं तनितुमक्षममीक्षसे त्वम् ।
त्वद्भक्तये स्पृहयतः शिव मे दयस्व
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १४ ॥

वित्तस्मयान्धगृहकाननसंप्रचार-
धौरेयभावमवधूय कदा मदङ्घ्री ।
स्तात्त्वत्प्रदक्षिणविधौ करुणावशात्ते
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १५ ॥

स्यात्त्वत्पदं विदलदम्बुजसौरभश्री-
विश्रामसीमभिरुदश्चितवाक्प्रपञ्चैः ।
स्तोत्रैर्विभो मम कदा नु सदानुबन्धि
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १६ ॥

पादौ प्रदक्षिणविधौ भवदर्चनेषु
पाणी स्तवेषु फणितीरपि मेऽन्तरात्मन् ।
ध्याने मनश्च विनियुङ्क्ष्व दयस्व मङ्क्षु
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १७ ॥

मूढोऽपटुर्भवदुपाश्रयणक्रमेषु
रूढोपतापविततिर्विपदां कदम्बैः ।
सीमा तृषामहमतोऽस्मि तवानुकम्प्यः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १८ ॥

अम्बेयमप्रतिहतप्रतिपत्तिशक्तिः
सर्वज्ञता च भवतो भुवने निरूढा ।
भूतिश्च वां निरवधिस्तनयस्तु सोऽहं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १९ ॥

पुत्रादयो न सुखयन्ति हि भावभेदा-
त्सोपाधिकप्रणयसंभ्रमिभिः किमेतैः ।
माता पिता च निरुपाधिकृपानिधिस्त्वं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २० ॥

उद्गद्गदस्वनगलं गलदम्बुनेत्रं
रोमाञ्चकञ्चुकितमञ्चितघर्मबिन्दु ।
त्वन्नामनि श्रवणगामिनि कल्पयाङ्गं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २१ ॥

दुर्लभ्यदुर्विपरिणत्यसुखानुबन्धि-
विप्लावितेषु विषयेषु वृथा निपात्य ।
मां खेदयन्न कथमुद्वहसेऽनुकम्पां
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २२ ॥

कंदर्पकोटिशतसुन्दरमिन्दुरेखा-
चूडं दरस्मितपरिस्फुरदाननेन्दुम् ।
कान्तं नगेन्द्रसुतया कलये भवन्तं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २३ ॥

सृष्टौ स्थितावपि लयेऽस्ति तव प्रभुत्वं
दुःखे तु मे द्वितयगोचरमेव दृष्टम् ।
व्यङ्क्तुं तदन्तविषयं तव को विलम्बः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २४ ॥

मन्दस्मितैर्दिशि दिशि स्फुरदिन्दुचूडै-
र्गौरीसखैः स्फटिकगौरमनोहराङ्गैः ।
त्वद्विग्रहैः कबलयाविरतं मनो मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २५ ॥

प्रेमातिरेकशिशिरां त्वदपाङ्गधारा-
मानन्दसिन्धुवलमानतरङ्गरेखाम् ।
संचारयन्मयि सहाम्बिकया दयेथाः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २६ ॥

भ्रूकिंकराः तव विरिञ्चपुरंदराद्याः
कस्त्वां विरोत्स्यति निरोत्स्यति किं ममैनः ।
दैन्यं ततो न बलवत्किमु दीनबन्धो
श्रीमातृभूत शिव पालय मां नमस्ते ॥ २७ ॥



अन्वेति शंकर न यं करुणाङ्कुरस्ते
　कस्तं विलोकयतु जल्पतु को धिनोतु ।
केयं विभो विमुखता मयि किंकरेऽस्मि-
　न्श्रीमातृभूत शिव पालय मां नमस्ते ॥ २८ ॥

भान्तं भवन्तमनघं मणिभूषणौघै-
　र्भान्त्योमया विमलविद्रुमपाटलाङ्ग्या ।
शृङ्गारितां कमुपयामि शशाङ्कगौरं
　श्रीमातृभूत शिव पालय मां नमस्ते ॥ २९ ॥

मन्दस्मितैः करुणया शिशिरैः कटाक्षैः
　प्रेमातिरेकमधुरैरपि चाभिलापैः ।
आनन्दयिष्यसि कदा नु सहाम्बया त्वं
　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३० ॥

गोपायितेति कुलदैवतमित्यजस्रं
　विस्रम्भतोऽर्पितभरं त्वयि दीनबन्धो ।
मामीक्षसे न कृपया यदि किं करोमि
　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३१ ॥

एकं सकृद्यदलसो न पुराभजं त्वां
नानादुरीशसतताश्रयदुर्विपाकः ।
तस्यैनसोऽयमधुनातिधुनाति चेतः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३२ ॥

एषा सुगन्धिचिकुरा जननी पिता त्वं
का ते सुते मयि विभो करुणाप्रहाणिः ।
किं चापि सा न खलु सार्द्रहृदो जनन्याः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३३ ॥

त्वत्संविदा तरति शोकमिति श्रुतीनां
भावो भवोन्नतिविधायि तवाभिधानम् ।
शोकापहं तदहमीश समाश्रयामि
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३४ ॥

त्वन्नामकीर्तनमघापहमाशयेन
शंसन्पुराणनिकरो न किलार्थवादः ।
तत्संश्रयोऽहमकृपास्पदमस्मि किं ते
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३५ ॥

कर्मानुरोधि फलमित्यवगम्यमाने
 ह्येनोहृतौ शुभविधौ च पटीयसस्ते ।
कर्मेति कं प्रति तु वञ्चनचातुरीयं
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३६ ॥

उत्सङ्गसीमनि सुगन्धिकचां निषण्णा-
 मुल्लासयन्कुचतटीं नखरावमर्शैः ।
आभासि शंकर निरन्तरमन्तरङ्गे
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३७ ॥

मन्देतरैरखिलमान्तरमन्धकारं
 माणिक्यभूषणमहोर्मिभिरंशुजालैः ।
धुन्वन्वपुस्तव विभासय मानसे मे
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३८ ॥

अन्तर्वसद्भवदुदारपदारविन्द-
 संदर्शनाय मम तत्प्रतिरोधकं द्राक् ।
अंहःकवाटपटलं विघटय्य देव
 श्रीमातृभूत शिव पालय मां नमस्ते ॥ ३९ ॥

चेतो मम त्वदनुचिन्तनबद्धतृष्णं
　　मुष्णन्ति तच्च विषया मुहुरेधितार्थाः ।
विघ्नाञ्जहि त्वयि विजृम्भय भक्तियोगं
　　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४० ॥

दृक्कूणितेन जगतः खलु सृष्टिरेषा
　　तेनैव तेऽवनलयौ भुवने निरूढौ ।
तेनैव संहर ममाघततिं दयालो
　　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४१ ॥

अङ्गं शिरीषमृदुलं परुषैर्ममाश्म-
　　प्रायैर्वचोभिरभिपीडितमीडनार्थैः ।
यत्तावकं तमपराधमिमं सहस्व
　　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४२ ॥

मन्दस्मितैर्भ्रुकुटिभिर्मधुरैः कटाक्षै-
　　र्वामभ्रुवां नवनवैश्च वपुर्विलासैः ।
त्वां नोऽभजं तरलितस्तदिदं सहस्व
　　श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४३ ॥

मन्दस्मितं मदनसुन्दरमिन्दुचूड-
मुत्सङ्गविस्फुरदुमोरसिजस्पृशं त्वाम् ।
ध्यायन्वसानि दिवसानि नयन्कदा वा
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४४ ॥

पाटीरसारलहरीं तुहिनांशुधारां
सौधाकरीमपि झरीमवमन्यमानः ।
त्वच्चिन्तनप्रभवनिर्वृतिभिः कदा स्यां
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४५ ॥

त्वामस्म्यसावजमुपासितुमक्षमोऽहं
मोहान्धया बत धिया न यदेतदेनः ।
हार्या त्वयैव कृपया मम दुर्दशेयं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४६ ॥

वित्तार्जनस्य सकलः किमसावनेहा
नेह स्थितेः फलमहो भवतो धनेहा ।
इत्थं दुरीश्वरगिरां पदमस्मि दीनः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४७ ॥

सांसारिकानवधिखेदपरंपरासू-
न्मज्जन्निमज्जदिव सीदति मानसं मे ।
आश्वासयाशु कृपया न किमीक्षसे त्वं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४८ ॥

लक्ष्मीपतिस्तव पदाभरणे स शेते
भिक्षाटनेन वद कं प्रति विप्रलम्भः ।
जानाम्यहं न किमशेषजगत्पतिं त्वां
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ४९ ॥

संसृत्युदन्वति वितन्वति दुःखमोह-
ग्राहैर्व्यथामहह मे दृढमज्जनेन ।
त्वं क्रीडसीति सदृशं तव किं दयालो
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५० ॥

मात्रा सुगन्धिकचया भवता च पित्रा
युक्तः प्रसूजनकहीन इवावसीदन् ।
अस्मीति वां जगदधीश्वरयोरयुक्तं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५१ ॥

मौढ्यादपाटवभरादपि पूजनं ते
नाहं तनोमि तदहं व्यथितो भवामि ।
विघ्नानपास्य वितर त्वदुपासनां मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५२ ॥

त्वद्वन्दनं ननु जगत्त्रयवन्द्यतायै
त्वत्पूजनं तु भुवनत्रयपूज्यतायै ।
पुण्योच्चयेन तदिदं भवदीयता मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५३ ॥

अल्पं महच्च सकलं फलमर्पणीयं
देव त्वयैव खलु तत्किमपीहमानः ।
त्वामाश्रयाम्यगतिको वद किं तवागः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५४ ॥

कंदर्पदर्पहरसुन्दररूपधेये
मन्दस्मिते भुवनमङ्गलनामधेये ।
खेदापहे भवति खेलय मानसं मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५५ ॥

सूर्योदये तिमिरजालमिवार्तिजालं
धावेन्न किं मम विभो यदि दृक्पथे स्याः ।
किं मे तथा न दयसेऽनुचितो विलम्बः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५६ ॥

त्वं त्रायसे यदि निवारयितुं क्षमः को
लभ्यं किमस्ति तव मय्यवसीदतीत्थम् ।
किं हीयते मदवने तव किं विलम्बैः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५७ ॥

चन्द्रोपलामलभवत्कमनीयमूर्ति-
संपूजनं सुदृढभक्त्यनघोपचारैः ।
ईहे सदा रचयितुं घटयाशु तन्मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५८ ॥

संसारसिन्धुसमुदित्वरखेदमोद-
वीचीपरिभ्रमपरिश्रमनोदनं मे ।
आकल्पय त्वदभिराधनहर्षभूतं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ५९ ॥

भक्तिस्पृशो भवति तस्य न शर्म तेन
त्राणव्रताश्रुतिषु वा न सकृत्प्रपन्नः ।
कस्मात्करोषि करुणां न मयि प्रपन्ने
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६० ॥

यन्मां न पालयसि तत्त्वदपाटवाद्वा
यद्वा मदीयदुरिताद्वद नाथ नाद्य: ।
सर्वेश्वरो ननु भवानत एव नान्य:
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६१ ॥

विश्वाधिनेतरि विपन्नजनावनस्थे
नाथे सति त्वयि न यन्मम खेदभङ्गः ।
तत्ते यशोहरमतो विनिवेदयामि
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६२ ॥

अस्योद्यत: समुपरोद्धुमनात्मनीनं
सत्यं भवानघफलार्त्यनुभावनासु ।
नेशस्तु सोढुमियदस्म्यहमार्तबन्धौ
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६३ ॥

आमज्जतः प्रतिपदं विपदम्बुराशौ
हृत्तं मम श्वसितुमप्यनधीश्वरस्य ।
किं पश्यतस्तव दया न कियान्विलम्बः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६४ ॥

स्वर्धेनवो न कति नो कति कल्पवृक्षा
भ्रूवश्यतां न कति यान्त्यपरेऽप्युदाराः ।
भक्तिस्पृशां त्वयि भजे तमहं भवन्तं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६५ ॥

एनामुपप्लवभरैर्जटिलामवस्थां
प्राप्तं हि मां परिहसन्ति नितान्तमन्ये ।
त्वं चेन्न पश्यसि दयार्द्रदृशा गतिः का
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६६ ॥

श्रीशः शरः कनकभूमिधरः शरासो
वासस्तु रूप्यशिखरी धनदः सखा ते ।
त्वामाश्रितस्य मम किं न धुनोषि दैन्यं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६७ ॥

अत्यङ्कुरार्णमुखखेदमहार्णवेऽस्मि-
न्मग्नस्य शंकर ममोत्तरणं प्रकल्प्य ।
त्वत्पूजनं घटय संक्षपितान्तरायं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६८ ॥

लोकेऽतिवर्तितुमलं तव शासनं कः
पद्मासनो भवतु पद्मविलोचनो वा ।
तद्दुर्लिपिं विधिकृतामपि मे विलुम्प
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ६९ ॥

निःसारतामपि विदन्विषयेष्वमीषु
निःसीमसक्तिरहमेषु हि गाढमूढः ।
रक्ष्यस्त्वयैव करुणानिधिना प्रसह्य
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७० ॥

मञ्चे तरङ्गितमणित्विषि पुष्पक्लृप्ते
मन्दस्मितं सह कदाम्बिकया भवन्तम् ।
पश्यामि पश्चिमतनूपहितोपबर्हं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७१ ॥

मय्यात्मनीनविमुखे मलिनस्वभावे
निर्वेदसागरनिमज्जनविप्लवेऽस्मिन् ।
कस्माद्भवस्यकरुणः करुणानिधे त्वं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७२ ॥

रुद्राक्षभृद्भसितभूषणधन्यमूर्ति-
र्भावं वहन्प्रमुदितं भवदेकतानम् ।
कालं क्षिपेयमिति साधय कामनां मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७३ ॥

त्वं चिद्घनोऽस्यहमसौ जडिमैकसीमा
दुःखाकरः पुनरहं सुखशेवधिस्त्वम् ।
युक्ता न ते स्थितिरियं तव गर्भवासे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७४ ॥

खेदं हरिष्यसि कदा शिशिरैः कटाक्षै-
र्मोदं करिष्यसि कदा मृदुभिर्वचोभिः ।
इत्युत्सुकोऽस्मि करुणां कुरु किंकरेऽस्मि-
न्श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७५ ॥

पाति प्रसह्य न किमर्भकमात्मनीनं
संयोजकैर्गुरुजनः स्मर तं क्रमं त्वम् ।
भक्तिं बलाद्भवति कल्पय मे दयालो
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७६ ॥

सोऽहं न किंचिदपि साधु करोमि पाप-
स्तुङ्गं पदं त्वभिलषामि तदप्यलज्जः ।
त्वद्दातृतासदयतागरिमावमर्शी
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७७ ॥

शक्तो न कश्चिदपि शासनमन्तरा ते
कः सेव्यतां त्वदितरः किमितः फलं वा ।
स्वामिन्नुपैमि शरणं करणैस्त्रिभिस्त्वां
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७८ ॥

मृत्युंजयोऽसि कमलापतिवल्लभोऽसि
तन्मृत्युदैन्यविपदोरपदं त्वदीयम् ।
त्वामाश्रितस्य मम किं सदृशी दशेयं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ७९ ॥

किं जामिता न भवतो मम दुःखधारा-
निर्मातुरस्मृतिपदं किमुपांशुयाजः ।
कस्मात्प्रभो किमपि शर्म न किं विधत्से
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८० ॥

काहं क्व चोन्नतपदस्पृहयालुतेय-
मात्मैव मामपहसत्यधुना तथापि ।
त्वत्संश्रये सति किमस्ति दुरापमीश
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८१ ॥

कस्याग्रतः प्रकटयानि रदानकाण्डे
कं हर्षयाणि नुतिभिः कमुपाश्रयाणि ।
मोघः श्रमेषु निपतेयमतो दयेथाः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८२ ॥

किं विद्यया किमु धनेन किमात्मजैर्वा
किं जायया किमितरैस्त्वयि चेन्न चेतः ।
आनन्दशेवधिमतस्त्वयि देहि भक्तिं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८३ ॥

दासोऽस्मि दैन्यविवशस्त्वयि सर्वलोक-
साम्राज्यसंपदमकम्पितमश्नुवाने ।
यत्तन्न ते समुचितं विमृश प्रसीद
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८४ ॥

त्वामाश्रितस्त्वदितराश्रयदैन्यभङ्ग-
मङ्गीकरोमि जगदीश कथं कथं वा ।
त्वां नायशः स्पृशतु तत्त्यज मय्युपेक्षां
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८५ ॥

श्रान्तं वपुर्दुरधिपाश्रयधावनान्मे
श्रान्तं वचो दुरधिपस्तुतिधोरणीभिः ।
क्रान्तं मनो दुरधिपाश्रयचिन्तयैव
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८६ ॥

हेमस्फुरत्तनुतरङ्गितकान्तिधारा
संप्लाव्यमानमणिभूषणदिव्यभासम् ।
मन्ये भवन्तमुमया मणिहेमपीठे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८७ ॥

स्वानन्दबिन्दुलवसंप्लवमानसर्व-
ब्रह्माण्डमण्डलमखण्डितवैभवं त्वाम् ।
कस्तोषयेत्तदपि तुष्य परिभ्रमैर्मे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८८ ॥

कारुण्यनिर्भरसुधारसशीतलाभिः
काले कदा तव कटाक्षपरंपराभिः ।
कष्टां दशामुपजहानि दृढोपगूढः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ८९ ॥

भक्ताभिभूत्यसहनो भवसि प्रतीतो
भक्तोऽस्म्यहं त्वदभिधाग्रहणप्रसक्तः ।
तस्यास्य ते मयि कृपा न कथं विषण्णे
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९० ॥

दृक्केलयस्तव कृपारसशीकराङ्का
यास्तासु तत्तदवनप्रवणासु चेत्स्यात् ।
एका पुनर्मदवनप्रवणा क्षतिः का
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९१ ॥

श्रेयो रुणद्धि यदि पापगणस्तदा त्वां
त्वन्नामकीर्तनमघक्षपणक्षमं मे ।
किं नास्ति किं न दयसे मयि हन्त खिन्ने
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९२ ॥

तातप्रसूतनयदारसुहृद्भिरेव-
मर्थोपपत्तिविरहादहहावसीदन् ।
नेतुं क्षणं न निपुणोऽस्मि ततः प्रसीद
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९३ ॥

श्रीशैलराजसुतया शिशिरैः कटाक्षै-
र्मां वीक्ष्यमाणमसकृन्मधुरस्मितेन ।
संभावयन्मयि कदा नु दयिष्यसे त्वं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९४ ॥

पारे भवाख्यजलधेर्भगवान्कृपाकू-
पारे भवत्यवतरिष्यति मे कदा वा ।
प्रेमा तृणीकृतपदं सकलं वितन्व-
न्श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९५ ॥

निर्धूतदुस्तिमिरमस्तसमस्ततत्त-
दुर्वासनं हृदयमेतदये वितन्वन् ।
अस्मिन्भविष्यसि कदा नु सुखं निषण्णः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९६ ॥

मद्वर्णनैस्तव कदास्तु मनःप्रसादो
मदृक्पथेऽस्तु च कदा तव दिव्यमूर्तिः ।
मत्कर्णगं तव वचोऽस्तु कदेति साशं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९७ ॥

कालेऽर्कनन्दनलुलायकदुस्वनोद्य-
त्कर्णज्वरापनयनैर्भवदुक्षजैर्मे ।
ध्वानामृतैः किमपि शर्म विनिर्मिमाणः
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९८ ॥

यं ते दया स्पृशति तं नयनान्तदासा
ब्रह्मादयो जगति दीनजनास्पदा सा ।
दीनाग्रणीरहमतः पुनरुक्तिरेषा
श्रीमातृभूत शिव पालय मां नमस्ते ॥ ९९ ॥

अन्यन्न मेऽभिमतमीश तदर्थ्यतां वा
मा वेप्सितं तु तदिदं भवतार्पणीयम् ।
यत्सर्वदा निभृतवृत्त्यभिधानमित्थं
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १०० ॥

हे शंकर स्मरहर प्रमथाधिनाथ
मन्नाथ साम्ब शशिचूड शिव त्रिशूलिन् ।
श्रीचित्सभेश करुणाकर फालनेत्र
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १०१ ॥

एवं स्तवं प्रपठतामुपशृण्वतां चा-
रोग्यायुरच्छशिवभक्तिधनर्द्धिविद्याः ।
दद्याः सुतानपि यशश्च विमुक्तिमन्ते
श्रीमातृभूत शिव पालय मां नमस्ते ॥ १०२ ॥

श्रीमातृभूत शिव चन्दनसान्द्रलिप्तां
संक्लृप्तहेमतिलकां श्रितपुष्पमाल्याम् ।
अक्ष्णामुना तव तनुं पिबतोऽक्ष्युदन्या
स्यान्मे यथाशु फलिनीश तथा दयेथाः ॥ १०३ ॥

मनो मे विक्रीतं तव चरणसेवां कलयितुं
कृपामूल्यं लब्धं सुरभिचिकुरे संप्रति मया ।
न जाने तद्दुष्टं निवसति च वा धावति च वा
कृतं भूयो भूयः करतलयुगास्फालनमुमे ॥ १०४ ॥

इति मातृभूतशतकं समाप्तम् ॥



